श्रीकुचस्पर्शसुखितं वीक्ष्य नारायणं मुहुः ।
हृदि के न प्रहृष्यन्ति सर्वदुःखनिरासतः ॥ ३ ॥
वैदेह्यपाङ्गसंश्लिष्टो दृष्टो यैरद्वयाकृतिः ।
रघुवीरस्त एवेह कृतकृत्या भवन्त्यलम् ॥ ४ ॥
हेरम्बोऽव्यात्स नः सिद्धिबुद्धिभ्यां सुनिषेवितः ।
पार्श्वगाभ्यां निजापाङ्गनीलोत्पलशतैरलम् ॥ ५ ॥

---

शिष्यन्नखिलजगदुपादानत्वेन महामायापरमात्मलीलाविग्रहौ श्रीमदुमामहेश्वरावेव वर्णयति—**जयत इति** । कावपि अवाङ्मनसगम्यत्वेनाचिन्त्यमहिमानावित्यर्थः । एतादृशौ । तत्रापि **अन्योन्येति** । परस्परालिङ्गनानन्दितावितियावत् । तत्रापि वेदान्तेति । उपनिषद्वाचामप्यगोचरीभूतकान्ती इत्यर्थः । अतएव अनन्तेति । असंख्यातसौन्दर्यादिसद्गुणमात्राभरणरमणीयावित्यर्थः । एतादृशौ दंपती जायापती जयतः सर्वोत्कर्षेण वर्तमानौ भवत इति योजना । अत्र कावपीति तद्वर्णने स्वासामर्थ्यं, अन्योन्येति संभोगशृङ्गारे समानुरागकत्वम्, वेदान्तेति निरतिशयचिदेकस्वरूपत्वम्, अनन्तेत्यपरिमितरूपलावण्यादिमत्त्वं च निरुक्तदंपत्योर्योत्यते । तेनेह स्वकीयैकालम्बितः परस्पराश्लेषानुभावितः परस्परमुखनिरीक्षणोद्दीपितः परस्परस्पर्शसुखसहकृतश्च समानुरागकः स्वकीयाविषयकत्वेनोत्तमतमः परस्परनिरतिशयरत्याख्यस्थाय्येव परिपुष्टः परिकराद्यलंकारतः प्राधान्येन ध्वन्यते । तेनेदमुत्तमोत्तममेव काव्यम् । तल्लक्षणादिकं तु प्रागुक्तदिशा स्वयमेवोह्यम् । यथावा गोवर्धनसप्तशत्याम्—'उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः' इति ॥ २ ॥ एवं पार्वतीपरमेश्वरयोर्वस्तुतोऽखण्डाद्वैतब्रह्मानन्दरूपत्वेन शान्तं निरुक्तभक्तानुग्रहार्थप्रकटितोक्तलीलाविग्रहविशेषादिमत्त्वेन शृङ्गारविशेषं च संवर्ण्यैवं लक्ष्मीनारायणयोरपि तं तथा वर्णयति—**श्रीति** । लक्ष्म्यालिङ्गनानन्दितमित्यर्थः । एतादृशं नारायणं श्रीविष्णुं मुहुः सगुणध्यानाभ्यासमहिम्ना वारंवारमित्यर्थः । हृदि निश्चलीकृतचित्ते वीक्ष्य प्रत्यक्षतामिव नीत्वा । सर्वेति परमानन्दरूपस्य तस्य निरुक्तसगुणध्यानविशेषेणापि वस्तुमाहात्म्यान्निखिलदुःखोन्मूलनेनेतियावत्। के पुरुषाः न प्रहृष्यन्ति। अपितु सर्वेऽप्यानन्दिता एव भवन्तीति भावः । शिष्टं त्विह पूर्वपद्योक्तविधयैवोह्यमिति दिक् ॥ ३ ॥ एवं श्रीगुर्वभिन्नत्वेन श्रीराममपि वर्णयति—**वैदेहीति** । सीतादृगन्तालिङ्गित इत्यर्थः । तत्र हेतुः । अद्वयेति। निरुपमरमणीयः पक्षे उन्मनीकटाक्षितः । तत्रापि हेतुः अद्वयेति । अद्वैतब्रह्मरूपः अतएव । रघ्विति । रलयोः सावर्ण्याल्लघवोऽल्पप्रज्ञा अपि वीराः संसारसंग्रामविजयिनो येन स तथेत्यर्थः । यैः पुरुषैः पूर्वपुण्यपरिपाकाद्दृष्टः साक्षात्कृतस्त एवेह संसारे । अलमत्यन्तं कृतकृत्या भवन्तीति संबन्धः । अन्यत्तूक्तमेव ॥ ४ ॥ एवमेव श्रीगणप-

आद्यं शराग्निसंख्याकश्लोकं रत्नं द्वितीयकम् ।
मुनिरामेन्दुपद्यं च तृतीयं वह्निभूमितम् ॥ ६ ॥
चतुर्थं चन्द्रभूनेत्रश्लोकं रामर्षिपञ्चमम् ।
षष्ठं वेदाग्निदृक्पद्यं सप्तमं खेन्दुदृङ्मितम् ॥ ७ ॥
अष्टमं रसदृग्रामं नवमं खाग्निसंमितम् ।
दशमं शास्त्रदृक्पद्यमितमेकादशं रसैः ॥ ८ ॥
द्वादशं द्वादशश्लोक्या युतमेवं सुमेलनात् ।
साहित्यसारः सानङ्गानङ्गशत्यन्वितोऽभवत् ॥ ९ ॥
श्रीनारायणगुर्वङ्घ्रिपद्मयुग्मं नमाम्यहम् ।
यदेककृपयाहं सच्छास्त्रसौरभ्यसंस्कृतः ॥ १० ॥
अद्वैतसच्चिदानन्देन्द्रपादाम्बुरुहद्वयम् ।
प्रणमामि न मे येन भाति क्वापि क्वचिद्द्वयम् ॥ ११ ॥

---

तिमपि संवर्णयति—**हेरम्ब इति** । सः सर्वाग्र्यपूज्यत्वेन जगद्विख्यात इत्यर्थः । एतादृशः अतएव सिद्धीति । स्वपत्नीभ्यामेवैतदभिधाभ्यामिति यावत् । तत्रापि पार्श्वेति । अतएव निजेति । स्वापाङ्गेन्दीवरसहस्रैरित्यर्थः । अलं अत्यन्तम् । अतएव स्विति परमप्रेम्णैव वारंवारमर्चितमित्येतत् । एतादृशः परमानन्दावस्थापन्नोऽतएव नः अस्माननन्तदुःखिनोऽखिलजीवान्प्रतीत्यर्थः । अव्यादाध्यात्मिकादित्रिविधदुःखादपि तत्प्रागभावासहवृत्तितद्ध्वंसनेन पालयत्वित्यर्थः । शिष्टं तु रसादिकं प्राग्वदेव ॥ ५ ॥ अथैतद्द्वादशरत्नानां श्लोकसंख्यानुक्रमणिकां तनोति—**आद्यमित्यादि**चतुर्भिः । **शरेति** ३५ **मुनीति** १३७ **वह्नीति** १३ ॥ ६ ॥ **चन्द्रेति** २११ **रामेति** ७३ **वेदेति** २३४ **खेन्द्विति** २१० ॥ ७ ॥ **रसेति** ३२६ एतत्संख्याकश्लोकात्मकमित्यर्थः । **खेति** ३० एतत्संख्याकश्लोकपरिमितमित्यर्थः । **शास्त्रेति** २६ एतच्छ्लोकसंख्यात्मकमस्तीत्यर्थः । **रसैरिति** ६ एतत्संख्यश्लोकैर्मितं परिमितमित्यर्थः ॥ ८ ॥ द्वादशमित्यादिनिगदव्याख्यातमेव । **एवमित्यादि** । एवं प्रागुक्तद्वादशरत्नश्लोकानां सुमेलनात्सम्यगेकीकरणादित्यर्थः। साहित्यसारः ग्रन्थोऽयम् । सानङ्गेत्यादि । अनङ्गसंख्याकत्रयोदशश्लोकैः सहिता एतादृशी या अनङ्गशती अनङ्गशब्देन त्रयोदशसंख्याकानां शतानां समाहारस्तथा तया अन्वितः । परिमितत्वेन विशिष्ट इत्यर्थः । अभवदिति योजना ॥ ९ ॥ अथाद्वैतविद्यागुरुचरणौ प्रणमति—**श्रीति** । उत्तरार्धपठितयच्छब्दानुरोधादिह तदित्यध्याहार्यम् । **सच्छास्त्रेति** । सच्छास्त्रमद्वैतशास्त्रमेव ॥ १० ॥ अथ श्रीमत्सद्गुरुपादपद्मद्वयं प्रणमति—**अद्वैतेति** । इहेन्द्रपदादग्रे सरस्वतीपदं द्रष्टव्यम् । येनोक्तपादपद्मप्रणामेनेत्यर्थः । क्वापि देशे क्वचिदपि काल

